नं० ४८३७

नाम- पीठान्यासः

कर्त्ता - ×

पत्र संख्या- १पत्रम् सं. ×

विषयः - तंत्रम्

ॐ गणेशग्रहनक्षत्रयोगिनीराशिपीठन्यासः षोढान्यासः । गणेशमातृकामंत्रस्य दक्षिणामूर्तिर्ऋषिः गायत्रीछंदः मातृकासुंदरी देवता उपास्यश्रीविद्यां
गत्वेन षोढान्यासे विनियोगः । श्रं अं ५ श्रीं ऐं हृत् इं ई ५ ईं क्लीं शिरः उं ऊं ५ ऊं सौः शिखा एं ऐं ५ ऐं सौः कवचं ओं औं ५ ओं क्लीं नेत्रे अं अः ५ अः सौः अस्त्रं ध्या
नं उद्यद्भानुसमप्रभां पीनोन्नतपयोधरां रक्तमाल्यांबरालेपभूषणैश्च विभूषितां पाशांकुशधनुर्बाणभास्वत्पाणिचतुष्टयां रक्तनेत्रत्रयां स्वर्णमुकुटोज्ज्व
लचंद्रिकां एवं ध्यात्वा न्यसेद्बीजपूर्वं गं अं विघ्नेशश्रीभ्यां गं आं विघ्नराजश्रीभ्यां नमः इत्यादि मातृकास्थानेषु न्यसेत् गणेशाः शक्तियुता विशेषेण गणेशोक्ताः इति गणे एक.
शमातृकान्यासः । अथ ग्रहमातृकान्यासः ग्रहमातृकामंत्रस्य ऋष्यादि पूर्ववत् षडंगग्रहरूपिणीसुंदरी देवता ध्यानं रक्तः श्वेतस्तथा रक्तः श्यामः पीतश्च
पांडुरं सर्वं कृष्णः कृष्णस्ततो धूम्रः धूम्रधूम्रं विचिंतयेत् रविमुख्यान्कामरूपान् सर्वाभरणभूषितान् वामोरुन्यस्तहस्तांश्च दक्षिणेन वरप्रदान् एवं ध्यात्वा मातृका
सर्वान्न्यसेत् अं १६ सूर्याय रक्तवर्णाय नमः हृदये यं ठं चं चंद्राय शुक्लवर्णाय नमः भ्रूमध्ये कं ५ मंगलाय रक्तवर्णाय नमः नेत्रयोः चं ५ बुधाय श्यामवर्ण
वर्णाय नमः हृदयोपरि टं ५ बृहस्पतये पीतवर्णाय नमः हृदयोपरिभागे तं ५ शुक्राय शुक्लवर्णाय नमः कंठे पं ५ शनैश्चराय श्यामवर्णाय नमः नाभौ शं ५ राहवे
कृष्णवर्णाय मुखे लं क्षं केतवे धूम्रवर्णाय नमः गुह्ये इति ग्रहमातृकान्यासः । नक्षत्रमातृकाया ऋष्यादि पूर्ववत् नक्षत्ररूपिणीसुंदरी देवता ध्यानं ज्वल
त्कालाग्निसंकाशाः सर्वाभरणभूषिताः नतिपाण्योऽश्विनीमुख्या वरदाभयपाणयः एवं ध्यात्वा मातृकां सर्वं नक्षत्राणि न्यसेत् यथा अं आं अश्विन्यै नमो ललाटे
इं ईं भरण्यै नमो दक्षनेत्रे उं ऊं कृत्तिकायै नमो वामनेत्रे ऋं ॠं रोहिण्यै नमो दक्षकर्णे लृं लॄं मृगशीर्षाय नमो वामकर्णे एं ऐं आर्द्रायै नमो दक्षनसि ओं औं पुनर्वसवे नमो
वामनसि कं पुष्याय नमः कंठे खं गं आश्लेषायै नमो दक्षस्कंधे घं ङं मघायै नमो वामस्कंधे चं पूर्वाफाल्गुन्यै नमो दक्षकूर्परे छं जं उत्तराफाल्गुन्यै नमो वामकूर्परे ।
झं हस्ताय नमो दक्षमणिबंधे ञं चित्रायै नमो वाममणिबंधे टं स्वात्यै नमो दक्षहस्ते ठं डं विशाखायै नमो वामहस्ते ढं अनुराधायै नमो नाभौ णं ज्येष्ठायै नमः
दक्षकट्यां तं मूलायै नमः वामकट्यां थं पूर्वाषाढायै नमो दक्षोरौ दं उत्तराषाढायै नमो वामोरौ धं श्रवणाय नमो दक्षजानुनि नं धनिष्ठायै नमो वामजानुनि
पं शतभिषायै नमो दक्षजंघायां फं बं पूर्वभाद्रपदायै नमो वामजंघायां भं मं उत्तराभाद्रपदायै नमो दक्षपादे यं रं लं वं शं षं सं हं लं क्षं रेवत्यै नमो वामपादे इति नक्षत्रन्यासः ।
योगिनीमातृकान्यासस्य ऋष्यादि दक्षिणा पूर्ववत् योगिनीरूपा सुंदरी देवता श्रीविद्यांगत्वेन विनियोगः ध्यानं सितासितारुणाधूम्रपीताः शुक्लाः सिताभ्रविनतयेत् चतु
र्भुजा समेतास्ते सर्वाभरणभूषिताः एवं ध्यात्वा न्यसेत् डां डीं डं मलवरयूं डाकिन्यै नमः अं १६ ममत्वचं रक्ष २ त्वगात्मने नमः कंठदेशे विशुद्धे १ रां रीं रं
रं मलवरयूं राकिण्यै नमः कं १२ मम रक्तं रक्ष २ असृगात्मने नमः हृदयानाहते २ लां लीं लं मलवरयूं लाकिन्यै नमः डं १० मम मांसं रक्ष २ मांसात्मने नमः ना
भौ मणिपूरे ३ कां कीं कं मलवरयूं काकिन्यै नमः वं ४ मम मेदो रक्ष २ मेदात्मने नमः गुदे स्वाधारे ४ सां सीं सं मलवरयूं साकिन्यै नमः वं ४ मम मज्जां रक्ष २
मज्जात्मने नमः भ्रूमध्ये आज्ञाचक्रे ५ यां यीं यं मलवरयूं याकिन्यै नमः अं : ५२ मम शुक्रं रक्ष २ शुक्रात्मने नमो ब्रह्मरंध्रे इति योगिनीमातृकान्यासः ।
राशिमातृकान्यासस्य ऋष्यादि दक्षिणा पूर्ववत् राशिरूपा सुंदरी देवता श्रीविद्यांगत्वेन विनियोगः ध्यानं रक्तः श्वेतः हरितः पांडुश्चित्रासितान्स्मरेत् पिशंग
पिंगलौ रक्तकर्बुरासितधूम्रभान् एवं ध्यात्वा न्यसेत् अं ४ मेषाय नमः दक्षपादगुल्फे उं ४ वृषाय नमः दक्षजानुनि ऋं २ मिथुनाय नमः दक्षवृ
षणे एं ऐं कर्कटाय नमः दक्षकुक्षौ ओं २ सिंहाय नमः दक्षस्कंधे अं अः शषसहक्ष कन्यायै नमः दक्षशिरोभागे कं ५ तुलायै नमः वामशिरोभागे चं ५ वृ
श्चिकाय नमः वामस्कंधे टं ५ धनुषे नमः वामकुक्षौ तं ५ मकराय नमः वामवृषणे पं ५ कुंभाय नमः वामजानुनि यं ४ लं क्षं मीनाय नमः वामपाद
गुल्फे इति राशिमातृकान्यासः । पीठमातृकान्यासस्य ऋष्यादि दक्षिणा पूर्ववत् पीठरूपिणीसुंदरी देवता श्रीविद्यांगत्वेन विनियोगः ध्यानं सितासितारु
णश्यामहरितपीतान्क्रमात् पुनरेतत्क्रमादेव पंचाशत्स्थानसंचये पीठानीह स्मरेत् सिद्धान्सर्वकामार्थसिद्धये एवं ध्यात्वा मातृकास्थानेषु मातृकावर्ण

सर्वाणिपीठानिन्यसेत् तानियथा ह्रींश्रींअंकामरूपपीठायनमः २आंवाराणसीपी· २इंनेपालपी· २ईंतर्केश्वरपी· २उंकाश्मीरपी· २ऊंकामरू
ऊपी· २ऋंपूर्णगिरिपी· २ॠंअर्बुदाचलपी· २लृंआम्रातकेश्वरपी· २लॄंगवाम्नपी· २एंत्रिस्रोतपी· २ऐंकामकोटपी· २ओंकैलासपी· २औंकेसगपी·
२अंकेदारपी· २अः चन्द्रपुरपी· २कंश्रीपी· २खंओंकारपी· २गंजालंधरपी· २घंमालवपी· २ङंकुलान्तपी· २चंकोटकपी· २छंगोकर्णपी· २जंमाहते
श्वरपी· २झंअट्टहासपी· २ञंविरजपी· २टंराजगृहपी· २ठंमहापथसरूपपी· २डंकोल्लगिरिपी· २ढंवल्लपुरपी· २णंकालेश्वरपी· २तंजयन्तीपी· २थंउ
ज्जयिनीपी· २दंचरित्रपी· २धंदेविकापी· २नंहस्तिनापी· २पंउड्डीशपी· २फंप्रयागपी· २बंषष्ठीपी· २भंमायापुरपी· २मंजलेश्वरपी· २यंमलय·
२रंश्रीशैलपी· २लंमेरुपी· २वंगिरिपी· २शंमाहेन्द्रपी· २षंवामनपी· २संहिरण्यपुरपी· २हंमहालक्ष्मीपी· २ळंउड्डियापी· २क्षंछायापी· २तेकू
ऋपरपीठायनमः इतिपीठमातृका: इतिषोढान्यासः